# गायत्रीव्याख्या

## अग्निपुराणान्तर्गता (२१६ अध्याये)

May 15, 2003

गायत्युक्थानि शास्त्राणि भर्गं प्राणांस्तथैव च।
ततः स्मृतेयं गायत्री सावित्री यत एव च।
प्रकाशिनी सा सवितुर्वाग्रूपत्वात्सरस्वती॥१॥

श्रीश्रीजीवगोस्वामिकृता विवृतिः

श्रीराधारमणो जयति।

सनातनसमो यस्य ज्यायान् श्रीमान् सनातनः।
श्रीवल्लभोऽनुजः सोऽसौ श्रीरूपो जीवसद्गतिः॥

अथाग्नेयस्था गायत्रीव्याख्या विव्रियते। उक्थानि प्रणवात्मकमन्त्रान्। शास्त्राणि सर्वान् अपि वेदान्। भर्गं वक्ष्यमाणं विष्णुरूपं तेजः। प्राणान् सर्वजीवहेतून् तद्विभूतींश्च। यतो यस्माद्गायति प्रकाशयति ततो गायत्री स्मृता। यस्मादेव च त्रयीमयस्य सवितुः प्रकाशिनी प्रादुर्भावयित्री तस्मात्सृजेत्सवितारमिति सावित्री च। वाग्रूपत्वात्सरस्वती च सा॥१॥

तज्ज्योतिः परं ब्रह्म भर्गस्तेजो यतः स्मृतम्।
भर्गः स्याद्भ्राजत इति बहुलं छन्दसीरितम्॥२॥

अथो गेयेषु मुख्यत्वाद्भर्गमेव विवृणोतितज्ज्योतिरिति। योऽयं भर्गः स एव तत्प्रसिद्धं परं ब्रह्म। यतो भर्ग एव तेजः स्मृतः स्वप्रकाशज्योतीरूपतया निर्दिष्टः। कया निरुक्त्या तस्य भर्गस्य तेजस्त्वं तत्राहभर्गः स्याद्भ्राजत इति। कथं सिध्यति ? तत्राहबहुलं छन्दसीति। भगवता पाणिनिना ईरितं सूत्रितमित्यर्थः॥२॥

वरेण्यं सर्वतेजोभ्यः श्रेष्ठं वै परमं पदम्॥३॥

अथ तस्य मन्त्रोक्तं वरेण्यत्वं साधयतिवरेण्यमित्यर्धेन। स च भर्गो वरेण्यं यत्परमं पदं सर्वस्याथाश्रयरूपं वस्तु। वरेण्यं नाम किं वस्तु ? तत्राह सर्वतेजोभ्यः श्रेष्ठं यत्तदेवेत्यर्थः। सर्वेषां तेजसां प्रकाशानां प्रकाशकत्वेन स्वप्रकाशरूपमिति भावः॥३॥

स्वर्गापवर्गकामैर्वा वरणीयं सदैव हि॥४॥

एवं भर्गस्य वरेण्यपदेन रूढ्या श्रेष्ठत्वं दर्शयित्वा योगवृत्त्या सर्वप्रार्थनीयत्वं दर्शयति स्वर्ग इत्यर्धेनस्पष्टम्॥४॥

वृणोतेर्वरणार्थत्वाज् जाग्रत्स्वप्नविवर्जितम्॥५६॥

तत्र तदर्थसम्पादकधात्वर्थमपि हेतुत्वेन निर्दिशति वृणोतेर्वरणार्थत्वादिति स्पष्टम् ॥५॥ अथ परमत्वज्ञापनाय पुनः वरमेव विशिनष्टि जाग्रत्स्वप्नविवर्जितमिति। तुरीयावस्थादपि जीवात्परमित्यर्थः॥६॥

नित्यं शुद्धं बुद्धमेकं नित्यं भर्गमधीश्वरम्।
अहं ब्रह्म परं ज्योतिर्ध्यायेमहि विमुक्तये॥७॥

तदेव भर्गवरेण्ययोः पदयोरर्थं दर्शयित्वा वाक्यस्य प्रयोजनमाहनित्यमिति। अहं भर्गं ध्यायेमहि, तत्र भर्गस्य विशेषणानि नित्यशुद्धमित्यादीनि। अहमित्यस्य विशेषणं ब्रह्मेति। तत्र नित्यं सदैव शुद्धं न तु जीववत्संसारित्वावस्थमित्यर्थः। एवं बुद्धं सदैव बोधयुक्तम् इत्यर्थः। एकं न तु जीववदनेकम्। अधीश्वरं सर्वशक्तियुक्तम्। अहं ब्रह्म परं ज्योतिरिति नदेवो देवमर्चयेदिति न्यायेन स्वस्य तादात्म्यभावना दर्शिता। ध्यायेमहि न केवलः अहमेव ध्यायेय किन्तु सर्वेऽपि वयं जीवा ध्यायेमेत्यर्थः। किमर्थं ध्यायसि ? तत्राह विमुक्तये। संसारमुक्तिपूर्वकतत्प्राप्तये। तदेतन्मते भर्गशब्दस्य अदन्तत्वे पुंस्त्वे च सिद्धे मन्तोर्ऽप्येवमेव व्याख्येयम्। सुपां सुलुग् इत्यादिना छान्दससूत्रेण द्वितीयया एकवचनस्यामः सुत्वादेशादेवं तत्र य इत्येव वक्ष्यते, न तु य इत्यनेन सवितुराकर्षः क्रियते। ध्येयः सदा सवितृमण्डलमध्यवर्तीति विधानात्। अतस्तद्भर्गोपदेशादिति न्यायाच् च॥७॥

तज् ज्योतिर्भगवान् विष्णुर्जगज्जन्मादिकारणम्॥८॥

तथैव तदित्यस्य मन्त्रगतपदस्य व्याख्यां विशिष्य दर्शयतितज् ज्योतिरित्यर्धेन भर्गपदवाच्यं तज्ज्योतिरेव तत्पदेन पूर्वमुक्तमित्यर्थः। तच्च भगवान् विष्णुरेव, तद् एव च वेदान्तेन दर्शितं जगज्जन्मादिकारणमित्यर्थः। मन्त्रे च प्रणवादि तदित्यन्तस्य धीमहीत्यन्तेनान्वय एव कार्यः। स्वयं प्रणवार्थरूपं कारणात्कार्यस्यानन्यत्वादिति भूरादिरूपं च तत्तत्त्वं सवितुर्देवस्य वरेण्यं भर्गो धीमहीति॥८॥

शिवं केचित्पठन्ति स्म शक्तिरूपं वदन्ति च।
केचित्सूर्यं केचिदग्निं दैवतान्यग्निहोत्रिणः।
अग्न्यादिरूपी विष्णुर्हि वेदादौ ब्रह्म गीयते॥९॥

अथात्र विप्रतिपद्यमानान् स्वमतसात्करोतिशिवं केचिदिति सार्धेन स्फुटम्॥९॥

तत्पदं परमं विष्णोर्देवस्य सवितुः स्मृतम्॥१०॥

तदेवमेव विष्णुसवित्रोः कारणकार्ययोस्तयोस्तादात्म्येनाभेदमपि दर्शयति तत्पदमित्य् अर्धेन। अत्र विष्णोरिति विश्वात्मकमित्यर्थः। तदिति स भर्ग इत्यर्थः॥१०॥

दधातेर्वा धीमहीति मनसा धारयेमहि॥११॥

धीमहीत्यस्य धात्वन्तरप्रक्रान्तत्वेन तत्त्वेन तमेवार्थं योजयति दधातेरित्यर्धेन स्पष्टम्॥११॥

नोऽस्माकं यच्च भर्गस्तत्सर्वेषां प्राणिनां धियः।
चोदयात्प्रेरयेद्बुद्धीर्भोक्तृकृणां सर्वकर्मसु।
दृष्टादृष्टविपाकेषु विष्णुः सूर्याग्निरूपभाक्॥१२॥

अत्र मन्त्रशब्दं योजयतिनोऽस्माकमिति सार्धेन। अत्र यच्चेति तदिति च पूर्वसूत्रेण सोर्लुको साधितं भर्ग इत्यनेनैव तदित्यस्य सम्बन्धश्च दर्शितः। चोदयात्प्रेरयादित्यनयोः पूर्वसिद्धान्तेन द्रढयतिविष्णुः सूर्याग्निरूपभाग् इति॥१२॥

ईश्वरप्रेरितो गच्छेत्स्वर्गं वा शुभ्रमेव वा॥१३॥

अत्र हेतुमाहैश्वर इत्यर्धेन। ईश्वरः पूर्वोक्तविष्णुरूपः॥१३॥

ईशावास्यमिदं सर्वं महदादिजगद्धरिः।
स्वर्गाद्यैः क्रीडते देवो यो हंसः पुरुषः प्रभुः॥१४॥

तदेव श्रुत्वान्तरेण प्रमाणयतीइशावास्यमिति। तस्येशस्य हरिरिति नामान्तरेण विष्णुत्वमेव स्थापयति हरिरित्यर्धकेन स्वर्गाद्यैरित्यर्धेन हंसः परमात्मा तद्रूपः पुरुषः॥१४॥

ध्यानेन पुरुषोऽयं च द्रष्टव्यः सूर्यमण्डले।
सत्यं सदाशिवं ब्रह्म विष्णोर्यत्परमं पदम्॥१५॥

तस्य वरेण्यत्वपराकाष्ठां दर्शयितुमाहध्यानेनेति। ध्यानेनध्येयः सदा सवितृमण्डलम्मध्यवर्तीत्याद्युद्दिष्टेन। नन्वेवं चेत्तर्हि ईशितव्यस्य सूर्यमण्डलस्य नाशे तस्यैश्वर्यनाशः स्यात्, तत्राहसत्यमिति। विष्णोर्यन्महावैकुण्ठलक्षणं परमं पदं तत्सत्यं कालत्रयाव्यभिचारि। सदाशिवं तापत्रयरहितं च। ब्रह्म बृहत्त्वात् बृंहणत्वाच्च यद्ब्रह्मोच्यते तद्रूपमेवेत्यर्थः॥१५॥

देवस्य सवितुर्देवो वरेण्यं हि तुरीयकम्॥१६॥

ननु तस्मिन् महावैकुण्ठे सवित्रन्तर्यामिणोऽस्माद्विलक्षण एव नारायणः, स च नित्य एव। सवित्रन्तर्यामिनोऽस्य तु कीदृक्त्वम् ? तत्राहदेवस्येत्यर्धेन। देवस्य द्योतमानस्य सवितुर्यो देवः ध्येयः सदा इत्यादिषु निर्दिष्टः। सोऽपि वरेण्यं तूरीयं समष्टिगतं जाग्रत्स्वप्नाद्यतीतं समाध्यवस्थायामेव गम्यं, यत्पदं भर्गसंज्ञकं स एकधा भवतीत्यादि श्रुतेः। सर्वाश्रयरूपं यद्वस्तु तद्रूपमेव। महाप्रलये महावैकुण्ठे एव महानारायणेनैकीभूय स्थायित्वादिति भावः॥१६॥

## योऽसावादित्यपुरुषः सोऽसावहमुत्तमम्।
## जनानां शुभकर्मादीन् प्रवर्तयति यः सदा॥१७॥

अथ तत्साम्यादित्यर्थमहङ्ग्रहोपासनारूपं त्रिपदाया अस्याश्चतुर्थस्या अजपा नाम ध्येयस्यार्थमाहसोऽसाविति पदेन स्पष्टम्॥१७॥

इत्यग्निपुराणस्थगायत्रीव्याख्याया विवृतिः श्रीजीवकृता समाप्ता।